# ॥ श्रीशास्ताकेशादिपादन्त वर्णनस्तोत्रम् ॥

आशानुरूपफलदं चरणारविन्द-
भाजामपारकरुणार्णव पूर्ण चन्द्रम् ।
नाशाय सर्वविपदामपि नौमि नित्य-
मीशानकेशवभवं भुवनैकनाथम् ॥ १
पिञ्छावली वलयिताकलित प्रसून-
सञ्जात कान्तिभर भासुर केशभारम् ।
शिञ्जान मञ्जुमणिभूषण रञ्जिताङ्गं
चन्द्रावतं सहरिनन्दनमाश्रयामि ॥ २
आलोलनीलललिताळुक हाररम्य-
माकम्रनासमरुणाधरमायताक्षम् ।
आलंबनं त्रिजगतां प्रमथाधिनाथं
मानम्रलोक हरिनन्दनमाश्रयामि ॥ ३
कर्णावलंबिमणिकुण्डल भासमान
गण्डस्थलं समुदितानन पुण्डरीकम् ।
अर्णोजनाभहरयोरिव मूर्तिमन्तं
पुण्यातिरेकमिव भूतपतिं नमामि ॥ ४
उद्दण्डचारुभुजदण्डयुगाग्रसम्स्थं
कोदण्डबाण महितान्तमतान्तवीर्यम् ।
उद्यत्प्रभापटलदीप्रमदभ्रसारं
नित्यं प्रभापतिमहं प्रणतो भवामि ॥ ५
मालेय पङ्कसमलङ्कृत भासमान
दोरन्तराळ तराळमलहारजालम् ।
नीलातिनिर्मल दुकूलधरं मुकुन्द-
कालान्तक प्रतिनिधिं प्रणतोऽस्मि नित्यम् ॥ ६
यत्पाद पङ्कजयुगं मुनयोऽप्यूजस्रं
भक्त्या भजन्ति भवरोग निवारणाय ।
पुत्रं पुरान्तकमुरान्तकयोरुदारं
नित्यं नमाम्यहममित्रकुलान्तकम् तम् ॥ ७
कान्तं कळाय कुसुमद्युतिलोभनीय-
कान्तिप्रवाह विलसत्कमनीय रूपम् ।
कान्तातनूज सहितं निखिलामयौघ-
शान्तिप्रदं प्रमथयूथपतिं नमामि ॥ ८
भूतेश भूरिकरुणामृत पूरपूर्ण
वारान्निधे, वरद, भक्तजनैकबन्धो ।
पायाद्भवान् प्रणतमेनमपारघोर-
संसारभीतमिह मामखिलामयेभ्यः ॥ ९

हे भूतनाथ भगवन्, भवदीय चारु-
पादांभुजे भवतु भक्तिरचञ्चला मे ।
नाथाय सर्वजगतां भजतां भवाब्धि-
पोताय नित्यमखिलाङ्गभुवे नमस्ते ॥ १०
इति श्री शास्ताकेशादिपादन्त वर्णन स्तोत्रं सम्पूर्णम् ॥